उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ॥
शुक्लापांगैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥२४॥

इदानीं पर्वतानां रमणीयतामालोक्य तत्रैव चिरं स्थास्यतीत्याशंक्य स्वकार्यविलम्बमाशंकमानः ततः प्रयाणाय पयोदं प्रार्थयन्नाह उदिति। हे मेघ, अहं ते तव कालक्षेपं कालविलंबं गिरौ गिरौ संभावयामि। कथंभूतेऽद्रौ ककुभसुरभौ अर्जुनपुष्पाणां सुगंधियस्मिंस्तत्र। कीदृशस्य ते तव मदभीष्टकार्यार्थं यियासोः जिगमिषोः। अपि अतः कारणात् हे सखे हे मित्र भवान् कथमपि केनाप्युपायेन गन्तुं आशु शीघ्रं व्यवस्येत् उद्यमं कुर्यात्। कथंभूतः सन्। शुक्लापांगैः मयूरैः प्रत्युद्यातः कृताभ्युत्थानः सन्। कथंभूतैः तैः सजलनयनैः चिरकालसुहृद्दर्शनेन बाष्पपूरितनेत्रैः। किं कृत्वा। वाण्या केकाः इति ध्वनिना स्वागतीकृत्य केकारूपं स्वागतमुच्चार्य।

हे सखे मित्र, मत्प्रियार्थं मत्प्रियायाः कार्यार्थं द्रुतं जिगमिषोः अपि तव पर्वते पर्वते प्रफुल्लितानां ककुभानां अर्जुनवृक्षाणां सुगन्धे कालक्षेपं उत्पश्यामि कालक्षेपो भविष्यतीति आतुरतया संभावयामि। अतः केका इति शब्दैः सत्कृत्य सजलनयनैः शुक्लापांगैः मयूरैः प्रत्युद्यातः संमुखाभ्युत्थानः सन् कथं अपि कष्टेनापि तत्स्थानं त्यक्त्वा अग्रे गन्तुं भवान् आशु व्यवस्येत्। उद्युक्तः भविष्यसीति याचे ॥२४॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ॥
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥२५॥

इदानीं दशार्णदेशप्रशंसाव्याजेन दशार्णदेशान्वर्णयन्नाह। पांड्विति। हे मेघ, दशार्णदेशविशेषा एवंविधाः संपत्स्यन्ते। क्व सति त्वयि आसन्ने

---

જાવા સ્રીની ઝટ નજીક તું તોય લાગે મને છે
ખોટી થાશે, ગિરિ ગિરિ વિષે તૂં સુગંધી જ લેવા ॥
સત્કારાતો સજળ નયનેં મોરલાને ટહૂકે
સામો જાતો ઝટ નિકળવા નિશ્ચયી તૂંજ થાજે ॥ ૨૪ ॥
પીળી કાંતી ઉપવનવડે કેવડાથી વિંટાયા
માળા બાંધે તરૂવર વિષે ગામનાં પંખિઓ જ્યાં ॥
તું આવ્યે સુંદર વન થશે શ્યામ જાંબૂ તરૂનાં
હંસો થોડા દિવસ વસતા દેશ એ છે દશાર્ણ ॥૨૫॥

निकटे सति । कथंभूता दशार्णाः । केतकैः कुसुमैः । कथंभूतैः केतकैः सूचिभिन्नैः अग्रविकसितैः । पाण्डुच्छायोपवनवृतयः पाण्डुच्छाया ईषत्पीतयुक्तधवलच्छाया युक्ताः उपवनाः नगरसमीपवर्तिनः उद्यानाः तैः वृतयः आवृताः वेष्टिताः। पुनः कथंभूता दशार्णाः आकुलग्रामचैत्याः आकुलानि व्याप्तानि ग्रामचैत्यानि देवभवनानि वृक्षविशेषाः वा येषां ते। कैः नीडारम्भैः पारावतादिगृहपक्षिभिः कृतैः नीडानां मालानां आरंभैः । वर्षागमनात्पूर्वं गृहपक्षिणः मालारूपं स्वगृहं रचयन्ति । केषां गृहबलिभुजां पारावतादीनां एतेन अहिंस्रजनाभिरामताप्रतिपादनं । पुनः कथंभूताः दशार्णाः परिणतफलश्यामजम्बूवनान्ताः परिणतानि परिपक्वानि फलानि तैः परिणतफलैः श्यामाः कृष्णाः जम्बूवनान्ताः जम्बूवनप्रांताः येषु ते । कतिपयदिनस्थायिहंसाः। कियद्दिनानि स्थायिनः स्थितिशीला हंसा येषु ते ।

हे मेघ, त्वयि आसन्ने प्राप्ते सति दशार्णसंज्ञकाः प्रदेशाः एतादृशाः भविष्यंति। कीदृशाः निर्गतसूचिरूपाग्रभागैः केतकैः केतकी–केवडा पोटकैः पाण्डुच्छायोपवनवृतयः पाण्डुवर्णकांतियुक्तानि उपवनानि नगरनिकटवर्तिनो ये उद्यानाः तैः आवृताः। पुनः गृहबलिभुजः पारावतचटककाकादिगृहसमीपस्थायिनः पक्षिविशेषाः तेषां वर्षागमनकारणात् नीडारंभैः मालाविरचनकार्यैः आकुला व्याप्ता ग्रामचैत्याः देवायतनानि वृक्षाश्च येषां ते। पुनः परिणतानि पक्वानि फलानि यानि श्यामानि तैः पक्वजंबूफलैः श्यामवर्णवद्भिः जंबूवृक्षैः युक्ताः उपवनप्रांतभागा येषां ते । पुनः कतिपयदिनपर्यंतं स्थायीभवन्ति सौंदर्येण स्थितिं कुर्वंति निवसन्ति हंसा येषु ते । एतादृशा दशार्णदेशाः तव गमनेन भविष्यंति ॥२५॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्ध्वा ॥
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्र
सभ्रूभंगं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २६ ॥

---

હે મિત્ર, મારી પ્રિયાને સંદેશો દેવા તું જલદી જવા ઇચ્છે પણ વચમાં આવતા પર્વતે પર્વતે ઉગેલા અર્જુન વૃક્ષનાં ફુલની સુગંધમાં લોભાઇને તું જવામાં વિલંબ કરીશ એવું મને લાગે છે. જેની આંખ્યુંના છેડા ધોળા છે અને જેની આંખ્યુંમાં પાણી આવી ગયાં છે, એવા તારી સામે આવેલા મયૂરો–મોર વડે કેકા શબ્દથી સત્કાર પામતો એવો તું કોઇપણ રીતે આગળ જવાને જલદી તૈયાર થાજે—સુગંધી વગેરે પ્રલોભનોથી રોકાઈ જાતો નહિ. ॥ ૨૪ ॥

હે મિત્ર, તું આગળ ચાલીશ એટલે દશાર્ણ દેશ આવશે. તે તારા આવવાથી કેવા થાશે તે સાંભળ્ય. અણિયાળા છેડાથી ખિલતા કેવડાના પોટા વડે પિળાશ પડતા ધોળા રંગની કાંતિવાળા બગીચા વીંટાઈ વળ્યા છે જેને એવા થાશે. પારેવાં ચકલાં વગેરે ઘર નજીકમાં રહેતાં પંખિયોના માળાની તૈયારીથી ગામનાં દેવસ્થાનો અને ઝાડવાં વ્યાપ્ત થઈ જાશે. પાકેલાં ફળ જાંબુ રાવણાંથી કાળાં બની ગયેલાં જાંબુનાં વન જેને છેડે શોભી રહેશે. અને કેટલાક દિવસ સુધી હંસો જ્યાં વસતા હશે. એવા દશાર્ણ દેશ તારા આવવાથી થાશે. ॥૨૫॥

हे मेघ, दिक्षु देशे विदेशे सर्वभूमण्डले प्रथितं विख्यातं विदिशा इति लक्षणं नामधेयं यस्यास्तां विदिशा नाम्नीं तेषां दशार्णजनपदानां राजधानीं गत्वा प्राप्य। सद्यः तत्क्षणं कामुकत्वस्य भुजान्तर्गतायाः रतिलंपटस्य कामिनः अविकलं संपूर्णं फलं लप्स्यसे लब्ध्वा च पश्चात् यत्र तव गमनस्थाने वेत्रवत्या जलं पास्यतीति। कथंभूतं जलं तीरोपान्तस्तनितसुभगं तीरोपान्ते नदीतटस्य प्रान्ते कंठे-कांठे इति लोके। प्रतिक्षणं जायमाना ये खळखळेति शब्दाः तैः सुभगं सुंदरं मनोज्ञं स्वादु मिष्टं मधुरं, चलोर्मि प्रतिक्षणं चलाः चपलाः कल्लोलाः ऊर्मयः तरंगाः यस्मिन् तत् एतादृशं वेत्रवतीसंज्ञाया नद्याः पयः जलं पास्यसि। कथमिव सभ्रूभंगं यथा कश्चित् कामी, वेत्रः कंदुकः क्रीडायष्टिः तद्वत्याः कामिन्याः सभ्रूभंगं भ्रुकुटिभंगयुक्तं स्तनितैः तत्कालोचितशब्दैः सुभगं मनोहरं स्वादु मधुरं मुखं पिबन्. कामुकत्वस्य कामिजनोपभोग्यविलासितायाः फलं लभते तद्वत् ॥ २६ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ॥
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥२७॥

---

તેની વિશ્વે પ્રથિત વિદિશા નામની રાજધાની
ત્યાં પ્હોંચીને ફળ ઝટ ઘણું પામશે કામિયોનું ॥
કાંઠે તેને ખળ ખળ થતું પીશ તું મિષ્ટ પાણી
સભ્રૂભંગ જયમ મુખ ચલત્ ઉર્મિ વેત્રાવતીનું ॥૨૬॥

હે મેઘ, દેશ વિદેશ અને આખી પૃથ્વીમાં વિદિશા નામથી પ્રસિદ્ધ એવી દશાર્ણ દેશની રાજધાનીમાં જઇને તુરત જ તું કામીજનને મળતાં કામ વિલાસનું સંપૂર્ણ ફળ મેળવીશ. તે મેળવીને પછી તું વેત્રવતીને કાંઠે થતા ખળ ખળ શબ્દોથી સુંદર, સ્વાદિષ્ટ, મીઠું, ચંચળ-ઉછળતા લોઢવાળું જળ પીજે. કેની પેઠે કે જેમ કોઇ કામી પુરુષ, દડે રમવાની લાકડી હાથમાં લીધી છે એવી યુવતીના ચડાવેલી ભ્રુકુટીવાળા, તે સમયને યોગ્ય એવા શબ્દોથી સુંદર એવા મધુર મુખને પીતો પીતો કામીજને ભોગવવાના વિલાસનું ફળ મેળવે છે તેની પેઠે તું વેત્રવતીનું જલ પીજે. ॥૨૬॥

નીચા નામે ગિરિ પર ચડી તૂં જરા લૈ વિસામો
તારે સ્પર્શે પુલકિત થશે પુષ્પ ખીલ્યા કદંબો ॥
વેશ્યાઓના રતિસુરભિથી બ્હેકતાં શ્હેરિયોનાં
ઉંચા હર્મ્યો પ્રગટ જ કરે છે ભર્યાં યૌવનોને ॥૨૭॥

इदानीं विदिशाराजधान्याः पार्श्वे पादरे वहमानायाः वेत्रवत्याः जलपानात्पूर्वं पश्चाच्च विश्रांतिः क्व ग्राह्येति उपस्थितप्रश्नस्योत्तरं कथयति नीचैरिति ।

हे मेघ, तत्र विदिशाख्यराजधान्यां त्वत्संपर्कात् त्वत्संगमात् प्रौढपुष्पैः बृहत्कुसुमैः अधिकविकसितैः पुष्पयुक्तैः कदम्बवृक्षैः पुलकितं इव संजातरोमांच-युक्तमिव नीचैः आख्यं नीचनामानं नीचा पर्वत इति प्रसिद्धं गिरिं पर्वतं विश्रामहेतोः विश्रान्त्यर्थं मार्गश्रममपनयनार्थं अधिवसेः आश्रयेथाः रात्रिवासं कुरुष्व । यो नीचैः नामा गिरिः पण्यस्त्रीरतिपरिमलोद्गारिभिः पण्यस्त्रियः पण्यांगनाः वारांगनाः ताभिः सह कृता या रत्यः ताभिरुत्पन्नः सुरतसंमर्दोद्भवो यः परिमलः तं उद्गारिभिः आविष्कुर्वद्भिः शिलावेश्मभिः शिलाभिः पत्थरैः बद्धैः पर्वतोपरि रचितैः वेश्मभिर्भवनैः नागराणां पौरजनानां उद्दामानि उत्कटानि यौवनानि प्रथयति प्रकटयति ॥२७॥

विश्रान्तः सन् व्रज नवनदीतीरजातानि सिंचन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ॥
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानां ॥२८॥

हे मेघ, तत्र नीचगिरौ विश्रांतः विगतश्रमः सन् विश्रांत्यनतरं व्रज अग्रतो यायाः । किं कुर्वन् नवनदीतीरजातानि नवानि अल्पकालोद्भवानि नदीनां तीरेषु जातानि उत्पन्नानि तृणादीनि नवजलकणैः नवजलबिन्दुभिः वर्षाभिः सिंचन् । तथैव मार्गे आगतानां उद्यानानां यूथिकाजालकानि यूथिकासंज्ञकाः सुगंधिपुष्पवल्ल्यः तासां जालकानि समूहान् मण्डपोरूपेण व्यवस्थितान् सिंचन् । तथैव गण्डयोः गल्लयोः कपोलयोः स्वेदस्य सूर्यतापे पुष्पावचयश्रमेण जातस्य स्वेदस्य अपनयनेन प्रमार्जनेन मुहुः लुंछनेन स्फेटनेन जाता या पीडा तया क्लांतानि म्लानानि कर्णोत्पलानि कर्णपरिहितकमलपुष्पाकारभूषणानि येषां ते तेषां । एतादृशानां पुष्पलावीमुखानां पुष्पावचायिकाः मालिनीस्त्रियः मालिपत्न्यः तासां मुखानां छायादानात् क्षणपरिचितः मुहूर्तमुपलक्षितः सन् पश्चात् अग्रतो व्रज गच्छ ॥ २८ ॥

---

હે મેઘ તે વિદિશા રાજધાનીમાં નીચૈઃ નામનો નીચા પર્વત નામનો પર્વત છે તે તારા આવવાથી ખીલેલાં ફુલવાળાં કદંબ વૃક્ષોથી જાણે કેમ તેને રોમાંચ થયાં હોય—તેનાં રૂંવાડાં ઉભાં થયાં હોય એવો તે દેખાશે, તે પર્વત ઉપર તું વિસામો ખાજે. જે પર્વત, ઉપર પત્થરોથી બાંધેલાં. વારાંગનાઓ સાથે કરેલા રતિસુખ—સુરત સુખના સંમર્દથી ઉત્પન્ન થયેલા સુગંધને બહાર પ્રસરાવતાં મકાનો નગરવાસીઓનાં ઉત્તમ યૌવનો પ્રગટ કરે છે. ॥૨૭॥

વીસામો લૈ વન નદિ તટોને, બગીચા તણી એ
વેલ્યૂંને તૂં જળકણવડે જૂઈની છાંટતો જા ॥
મેલાં કર્ણાભરણ પરસેવો લુવાથી જ ગાલે
છાયા આપી પરિચિત થઈ માળણોના મુખોનો ॥ ૨૮ ॥

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तरस्यां
सौधोत्संगप्रणयविमुखो मा स्म भूरुज्जयिन्याः ॥
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापांगैर्यदि न रमसे लोचनैर्वंचितोसि ॥ २९ ॥

इदानीं धर्मकामार्थसाधनाय उज्जयिन्या गमनं प्रति मेघं प्रवर्तयन्नाह । वक्र इति ।

हे मेघ उत्तरस्यां उत्तरदिशि प्रस्थितस्य भवतः यदपि यद्यपि पन्था मार्गः वक्रः कुटिलः भवति तथापि वक्रमार्गं स्वीकृत्यापि उज्जयिन्याः सौधोत्संगप्रणयविमुखः मा स्म भूः सौधानां अत्युच्चप्रासादानां उत्संगाः उपरिभागाः आकाशिकाः अगाशीति प्रसिद्धाः तेषां प्रणयः मिलनोद्भूतः स्नेहः तद्विमुखः पराङ्मुखः मा भूयाः । अर्थात् गिरिशिखरसमाः उत्तुंगाः तव विश्रांतिक्षमा ये धवलगृहाः तेषां उत्संगैः अगाशीभिः नित्यं तव गमनागमनेन परिचयात् परस्परं निबद्धो यः प्रणयः स्नेहः तस्य विमुखः मा भूयाः सौधोत्संगान् मिलित्वा जयजयेति कृत्वा गच्छेः । तत्र उपर्युक्तसौधोत्संगेषु उपरिभागेषु अगाशीसु रममाणानां पौरांगनानां उज्जयिनीयुवतीनां विद्युद्दामस्फुरितचकितैः विद्युदाम्नां विद्युल्लहरीणां स्फुरितैः स्फुरणैश्चकितैः तव गमनप्रकाशिका या तत्र विद्युल्लता तस्याः स्फुरणेन भयाश्चर्योत्साहादिभावयुक्तैः अत एव लोलापांगैः लोलाः चपलाः चंचला ये अपांगाः पर्यंताः कटाक्षाः येषु तैः एताद्दशैः लोचनैः नेत्रैः यदि न रमसे तर्हि त्वं वंचितोसि निष्फलजन्मासि इति मन्ये ॥ २९ ॥

---

હે મેઘ, તે નીચા પર્વત ઉપર વિસામો ખાઈને પછી તું આગળ ચાલતો થાજે. માર્ગમાં આવતી નદીઓને કાંઠે તુરતનાં ઉગેલાં ઝાડ વગેરે ઉપર નવાં પાણીને છાંટતો જાજે. તથા રસ્તામાં આવતા બગીચાઓની જુઈ ચમેલી વગેરે વેલ્યુંની માંડવીઓને પણ તારા નવાં પાણીથી પલાળતો જાજે. તથા તડકામાં ફુલ વીણવા આવેલી માલણ્યો, પોતાના ગાલપર વળેલો પરસેવો વખતો વખત લુવાથી મેલા થઈ ગયેલ છે કાનમાં પહેરેલાં કમળ પુષ્પના આકારનાં કુંડળાદિ ઘરેણાં જેનાં એવાં માલણ્યો-માળીની સ્રીઓનાં મુખ ઉપર છાંયો કરી-એ રીતે તે સ્રીઓ સાથે થોડી વાર સહવાસ મેળવીને પછી આગળ ચાલજે. ॥ ૨૮ ॥

વાંકો રસ્તો યદપિ તમને ઉત્તરે ચાલતાને
તૂં ના થાજે પ્રણય વિમુખો હર્મ્ય ઉજ્જેનનાં થી ॥
વિદ્યુત શેર્ડ્યૂં સ્ફુરિત ચકિત શ્હેરની એ સ્રિયોનાં
નેત્રો સાથે ન રમિશ તો છેતરાણો ગણાશે ॥ ૨૯ ॥

હે મેઘ, તારે ઉત્તર દિશાએ જાવું છે એટલે તારે જરા ત્રાંસે માર્ગે ચાલવું પડશે-ફેરમાં જાવું પડશે છતાં પણ એ ત્રાંસા માર્ગનો સ્વીકાર કરીને પણ તું ઉજ્જયિની-ઉજ્જેન નગરીને જોયા વિના જાશ માં. તેનાં આકાશ સાથે વાતું કરતાં, અનેક ભોંયુંવાળાં,

वीचिक्षोभस्तनितविहगश्रेणिकांचीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ॥
निर्विन्ध्यायाः पथि भव रसाभ्यंतरं सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ ३० ॥

इदानीं उज्जयिनीं त्यक्त्वा अग्रतः प्रचलितस्य मेघस्य मार्गे आगतवत्याः नद्याः संयोगप्राप्तिरूपसम्बन्धेन मेघं प्रलोभयन्नाह। वीचि इति ।

हे मित्र, निर्विंध्या नाम नद्याः पथि निर्विन्ध्यां प्रति गतवति मार्गे भव गच्छ। वीचिक्षोभस्तनितविहगश्रेणिकांचीगुणायाः वीचीनां तरंगाणां कल्लोलानां यः क्षोभः इतस्ततः प्रपातः प्रसर्पणं तेन स्तनिताः शब्दिताः ये पक्षिणः तेषां श्रेणिः पंक्तिः सैव कांचीगुणः मेखलाबंधनं यस्याः सा तस्याः। स्खलितसुभगं उपरिभागात्पाषाणोपरि प्रपातेन सुभगं मनोहरं यथा स्यात् तथा संसर्पन्त्याः गच्छन्त्याः दर्शितावर्तनाभेः दर्शिता प्रकटिता आवर्तः जलानां भ्रमः जलानां वेगेन यो भ्रमः चक्रं कुंडलसमानाकारः विभ्रमः विलासः स एव नाभिर्यस्याः सा तस्याः निर्विन्ध्यायाः निर्विन्ध्या नामनद्याः विन्ध्यपर्वतान्निर्गतायाः रसाभ्यन्तरं रसः जलं• तस्य अभ्यन्तरं मध्ये सन्निपत्य संगत्य जलगर्भं प्रविश्य पश्चात् पथि भव अग्रतो मार्गे गच्छ। इत्थं तव पत्नीरूपा निर्विन्ध्या नदी त्वत्प्रार्थनारूपेण नाभेः विभ्रमं विलासं दर्शयति इदमेव त्वत्सत्काररूपं तस्या आद्यं प्रणयवचनमस्ति। प्रियेषु प्रियतमेषु अभीष्टेषु विभ्रमो हि नाभ्याद्यंगप्रदर्शनरूपो विलास एव स्त्रीणां-प्रणयवचनं अस्ति प्रियस्य सत्कारवचनं ज्ञेयं अर्थात् मुखेन सत्कारं प्रार्थनावचनं ताः न उच्चारयन्ति। स्त्रियः स्वमुखेन नाभीष्टं प्रार्थयन्ति किन्तु विभ्रमेण अंग-प्रत्यंगदर्शनरूपविलासप्रकटनेन एव प्रार्थनां कुर्वन्ति।

---

મહેલ જેવાં મકાનોની ઉપરની ભોંય અગાશીયું સાથેના સ્નેહને ભુલતો નહી. વખતો વખત તારા માર્ગમાં આવતી એ પર્વતની ટેકરીયું જેવાં ઉચાં મકાનની અગાશીયું તારા વિસામાનાં સ્થાન છે, તેથી તેની સાથેની મિત્રાચારીને લીધે તેને મળ્યા વિના જાતો નહી.

એ ઉચા મકાનોની અગાશીઓમાં ક્રીડા કરતી ઉજ્જેન નગરીની યુવતીઓનાં, તારા આવવાને સૂચવતી વિજળીની લહેરૂંના—ચમકારાથી ભય આશ્ચર્ય ઉત્સાહથી ચકિત થયેલાં ચંચળ છેડાવાળાં નયનો સાથે રમ્યા વિના જાશ—એ નેત્રોને જોયા વિના જાશ તો તું છેતરાણો છો તેં ભૂલ કરી છે એમ હું માનીશ. ॥ ૨૯ ॥

લોઢક્ષોભેં મુખર વિહગ શ્રેણિયેં મેખલાળી
વેગેં જાતી સરસ પડતી ઘૂમરી નાભિયાળી ॥
નિર્વિન્ધ્યાને મળિ રસભર્યો થૈ પછી થા વિદાય
સ્રીતું એ છે પ્રણય વચન સ્નેહિયોમાં વિલાસ ॥ ૩૦ ॥

यथा कश्चित्कामी निर्विन्ध्यायाः मुग्धायाः पतिसकाशं गमनेन जातो यः क्षोभस्तेन स्तनिता स्वर्णरौप्यकृता ये विहगाकारकिंकिण्यः घुघर्यस्तासां श्रेण्या पंक्त्या रचिता या कांचीगुणा कटिमेखला यस्याः । सवेगं पतिसकाशं गमनेन जातं यत्स्खलनं मार्गमध्ये पादांगुष्ठाघाताः तैः सुभगं मनोहरं यथा स्यात् तथा संसर्पन्त्याः गच्छंत्याः दर्शिता आवर्तयुक्ता चक्राकारा नाभिर्यस्याः तस्याः युवत्याः रसाभ्यन्तरं सुरतरसमनुभूय सन्निपत्य मोदते यथा तथा भूतस्त्वमिति शेषः ॥३०॥

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ॥
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३१ ॥

इदानीं नदीनायिकायास्तद्वियोगदुःखसंजातविरहदशावर्णनव्याजेन तस्य कामिनीप्रियत्वं आह । वेणीति ।

हे सुभग सर्वसौन्दर्यगुणालंकृत हे मेघ, तां निर्विन्ध्यां अतीतस्य अतिक्रान्तस्य ते तव अग्रे सिन्धु नाम नदी भविष्यति आगमिष्यति । कथंभूता सा सिन्धुः वेणीभूतप्रतनुसलिला वेणीभूतं केशपाशसदृशं प्रकर्षेण स्तोकीभूतं सलिलं जलं यस्याः सा । तटरुहतरुभ्रंशिभिः तटयोः रुहाः स्थिता ये तरवः तेभ्यो भ्रश्यन्तीति तथोक्तैः तीरयोः वर्तिभिः जीर्णपत्रैः तरुभ्यः पतितैः पक्वपत्रैः पाण्डुच्छाया धवलच्छाया कांतिर्यस्याः सा पलाशदृशी सा सिन्धु नाम नदी विरहावस्थया ते

---

હે મિત્ર, ઉજ્જેન છોડ્યા પછી નિર્વિન્ધ્યા નામની નદી તરફના માર્ગે તું ચાલતો થા. નદીના તરંગની પછડાટથી કલ્લોલ કરતાં પંખિયોની હાર્યું રૂપી કંદોરાવાળી, ઉંચાણવાળા ભાગમાંથી પછડાવાથી સુંદર વેન પ્રવાહવાળી, આગળ વહેતી એવી, ઘુમરીને લઇ કુંડાળાં વળતાં પ્રવાહ રૂપે જાણે નાભીને દેખાડતી હોય એવી વિંધ્ય પર્વતમાંથી નિકળેલી નિર્વિન્ધ્યા નામની નદીના જળમાં પેસી તેનો સ્વાદ લઈ પછી આગળ જાજે. આ રીતે તારી પત્ની રૂપ નિર્વિન્ધ્યા નામની નદીનાં જળમાં પેસી તેનો સ્વાદ લઇ પછી આગળ જાજે. તારી પત્ની રૂપ નિર્વિન્ધ્યા નદી નાભિનો વિલાસ દેખાડીને તારા પ્રત્યેનું હેત દેખાડે એ તારા પ્રત્યેનું એનું સ્નેહવાળું વચન છે. એમ માનજે. પ્રિયજનોને નાભિ વગેરે અંગ દેખાડવા રૂપ વિલાસ એજ સ્ત્રીઓનું સ્નેહ વચન છે તેઓ મોઢેથી બોલતી નથી પરંતુ અંગ પ્રત્યંગ દેખાડીને જ પ્રાર્થે છે. ॥ ૩૦ ॥

વેણી જેવા વિરલ જલની તે વિયોગી જ સિન્ધુ
ધોળાં પાનો તટતરૂ પડયાં થી જ સૌભાગ્યવંતી
દેખાતી તે સુભગ વિરહી ની દશાને જ જેથી
છોડે તેણી ઝટ કૃશપણું યોજજે તે ઉપાય ॥૩૧॥

सौभाग्यं व्यञ्जयन्ती प्रकटयति सती वर्तते । अतः अवश्यं येन विधिना येन प्रकारेण सा कार्श्यं दौर्बल्यं त्यजति परिहरति स विधिः उपायः त्वया भवता एव अवश्यं उपपाद्यः घटनीयः ॥ ३१ ॥

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ॥
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकं ॥३२॥

इदानीं उज्जयिनीं वर्णयन्नाह प्राप्येति ।

हे मेघ, उदयनकथाकोविदग्रामवृद्धान् उदयनस्य वत्सराजस्य कथा चरित्रं तद्विज्ञाने कोविदाः ज्ञातेतिहासाः उदयनेतिहासचतुराः ग्रामाणां वृद्धाः येषु तान्। एतादृशान् अवंतीन् अवन्तिनाम्ना प्रसिद्धान् मालवदेशान् प्राप्य । पूर्वोद्दिष्टां प्रथमकथितां श्रीविशालां लक्ष्मीसंपदैश्वर्यादिविविधप्रकारैर्विशालां विस्तीर्णां विशालां इत्यपर नाम्ना प्रसिद्धां उज्जयिनीं अनुसर गच्छ। सुचरितफले सदाचारादिधर्माणां यत् फलं तस्मिन् स्वल्पीभूते पुण्यानां स्तोकीभूते सति दिवः स्वर्गात् गां गतानां पृथिवीं प्राप्तानां नृणां शेषैः अवशिष्टैः पुण्यैः पृथिव्यां हृतं आनीतं कान्तिमत् प्रकाशमानं दिवः स्वर्गस्य खण्डं भागः इव उज्जयिनी नगरी वर्तते ॥३२॥

---

હે સૌંદર્યગુણાલંકૃત મેઘ, તે નિર્વિન્ધ્યા નદીને ઓળંગ્યા પછી આગળ ચાલીશ એટલે સિન્ધુ નામની નદી આવશે. તે સ્ત્રીના ચોટલાની પેઠે સાંકડા વેનવાળી હશે. એને બેઈ કાંઠે ઉગેલાં મોટાં ઝાડવાં ઉપરથી ખરેલાં પાકી ગયેલાં પીળાશ પડતા ધોળા રંગનાં પાંદડાંથી ધોળા રંગની દેખાતી અને એ રીતે તારા વિરહની દશાથી તારૂં સૌભાગ્ય ચિન્હ દેખાડતી એવી એ નદીનું દુબળાપણું જે ઉપાયેં મટે તે તારે અવશ્ય કરવો જોઇએ. ॥૩૧॥

જ્યાં છે વૃદ્ધો ઉદયન કથા જાણતા માળવાના
દેશેં જૈ તૂં વિપુલ ધનથી યુક્ત ઉજ્જેનમાં જા
થોડાં બાકી સુકૃત ફળથી સ્વર્ગિયો ભૂમિ આવ્યા
બાકી પુણ્યેં વિરચિત પુરી સ્વર્ગનો ભાગ જાણે ॥ ૩૨ ॥

હે મેઘ ઉદયન જે વત્સરાજ તેની વાસવદત્તાના હરણરૂપ અદ્દ્ભુત ઐતિહાસિક કથાને જાણનાર ગામડાના વૃદ્ધો જેમાં વસે છે એવા અવંતી દેશ-માલવ દેશમાં જઇને ઉપર કહેલી લક્ષ્મી સમૃદ્ધિ ઐશ્વર્ય વૈભવ વિલાસથી ભરપૂર એવી વિશાલાના બીજા નામથી પ્રસિદ્ધ વિશાળ ઘણી મોટી એવી ઉજ્જૈન નગરીમાં જાજે. ઓછાં થયેલાં પુણ્યોને લઈ સ્વર્ગમાંથી પૃથ્વીપર અવતરેલાં મનુષ્યોનાં બાકી રહેલાં પુણ્યથી લાવેલો પ્રકાશમાન એવો સ્વર્ગનો એક ભાગ જાણે કેમ હોય તેવી એ નગરી શોભે છે ॥૩૨॥

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ॥
यत्र स्त्रीणां हरति सुरतग्लानिमंगानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३३ ॥

इदानीं उज्जयिनीं वर्णयन्नाह दीर्घीति ।

हे मेघ, यत्र यस्यां उज्जयिन्यां सिप्रावातः सिप्रानाम नदीस्पर्शेन आगतो वातः पवनः स्त्रीणां सुरतग्लानिं संभोगखेदं श्रमं वा हरति अपनयति । कीदृक् सिप्रावातः पटु पाटवयुक्तं सुंदरं मदकलं हर्षमनोज्ञं सारसानां लक्ष्मणापरनामकपक्षिणां कूजितं शब्दितं दीर्घीकुर्वन् विस्तारयन् । पुनः स्फुटितकमलामोदमैत्रीकषायः प्रत्यूषेषु प्रभातेषु स्फुटितानि विकसितानि यानि कमलानि तेषां आमोदः परिमलः तेन सह मैत्री संपर्कः संयोगः तेन कषायः तूराख्यस्वादवान् मधुरसुगंधवान् । प्रार्थना चाटुकारः प्रियतमः वल्लभः इव प्रार्थनायां सुरतयांचायां मृदूनि प्रियाणि करोतीति अत एव अंगानुकूलः स्पर्शसुखः एतादृशः सिप्रावातः स्त्रीणां सुरतग्लानिं संभोगखेदं हरति अपनयति । प्रियतमोपि सारसानां कूजितं निजसुरतकूजितेन दीर्घीकरोति वर्धयति प्रियतमोपि अंगानुकूलः हस्तसंवाहनेन स्पर्शसुखदः भवति तद्वत् ॥ ३३ ॥

---

લાંબાં કર્તો મધુર મદનાં કુંજનો સારસોનાં
પ્રાતઃકાળે કમળ ખિલતાં ના સુગંધે મળેલો ॥
જયાં સ્ત્રીઓના સુરત સુખનો થાક ઉતારતો એ
સિપ્રા વાયુ પ્રિયતમ સમો વાય છે ત્યાં સુગંધી ॥૩૩॥

હે મેઘ, જે ઉજ્જયિનીમાં, સુંદર હર્ષથી મનોહર એવા સારસ પક્ષિઓના ગુંજનને વિસ્તારતો, સવારમાં ઉઘડેલાં કમળ પુષ્પોના પરિમલ-સુગંધ સાથે થયેલા સંયોગથી તુરા મીઠા સ્વાદવાળી સુગંધ આપતો, સ્પર્શથી સુખ દેતો, સુરત પ્રાર્થના માટે પ્રિય વચન કહેતા પ્રિય સરખો, અંગોને સુખ આપતો, સિપ્રા નદીને સ્પર્શીને વાતો પવન સ્ત્રીઓનો રતિ સુખનો થાક ઉતારે છે. ॥૩૩॥

हारांस्तारांस्तरलगुटकान् कोटिशः शंखशुक्ताः
शष्पश्यामान् मरकतमणीनुन्मयूखप्ररोहान् ॥
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भंगान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥३४॥

इदानीं उज्जयिनीपुरीसमृद्धिं वर्णयन्नाह । हारानिति ।

हे मेघ, त्वं तां पुरीं उज्जयिनीं आश्रय । यस्यां विपणिरचितान् हट्टस्थापितान् विपणिषु हट्टेषु चातुर्येण व्यवस्थापितान् एतान् रत्नपदार्थान् दृष्ट्वा सलिलनिधयः समुद्राः तोयमात्रावशेषाः . विविधरत्नेषु गर्भितं यज्जलं तोयमात्रं जलमात्रं अवशेषं अवशिष्टं येषु ते संलक्ष्यन्ते दृश्यन्ते । अर्थात् विविधपाणिदाररत्नराशिषु गर्भितं बहुमूल्यप्रकाशकं यत्समुद्राणां जलं तत् एतेषु रत्नेष्वेव निविष्टं किमिति प्रेक्षकाणां आश्चर्यं जायते। तान् कान् कानि कानि रत्नानि रत्नाभूषणानि इत्याह। तरलाः तेजोलहरिद्योतकाः मनोहराः हारेषु जटिता बद्धपारदगुटिकास्तासां तारकवत् प्रकाशकत्वात्ताः येषु तान्। पुनः तारान् तारकवत्प्रकाशमानान् तेजोराशिमनोहरान् महामूल्यहीरकैर्युक्तान् एतादृशान् कोटिशः हारान्। कोटिशश्च शंखाश्च शुक्तयश्च ताः शंखशुक्तीः। शष्पश्यामान् बालतृणवत् श्यामच्छायायुक्तहरितवर्णान्, उन्मयूखप्ररोहान् ऊर्ध्वंगताः बहिर्निर्गताः ये मयूखाः प्रकाशकिरणाः तेषां प्ररोहाः लहर्यः येषु तान् एतादृशान् कोटिशः मरकतमणीन्। विद्रुमाणां प्रवालानां भंगाः शतशः प्रवालशलाकाराशयः तान्। एतानि सर्वरत्नानि दृष्ट्वा रत्नाकराः समुद्रा एष्वेव जलमात्रेणावशिष्टाः किमिति संलक्ष्यन्ते दृश्यन्ते। अर्थात् उज्जयिन्यां हट्टेषु कोटिशः पाणीदार-बहुमूल्यानां कोटिशो रत्नानां राशयः विद्यन्ते। एतादृशीं सर्वैश्वर्यसमृद्धिधनधान्यादिसिद्धिसम्पन्नां उज्जयिनीं आश्रय दृष्ट्वा पश्चादग्रतो गच्छ ॥३४॥

---

હીરા હારો તરલ મણકા સૂતના, શંખ છીપો
ઘેરા લીલા મરકત મણી શોભતા છે કરોડો ॥
પર્વાળાના નિરખિ ઢગલા જે પુરીનાં બજારે
જાણે પેશી સલિલ જ રયાં સાગરોનાં જણાય ॥૩૪॥

ઉજ્જયિનીની સમૃદ્ધિ ઐશ્વર્યનું વર્ણન કરતાં કહે છે હે મેઘ, તું એ ઉજ્જેન નગરીમાં જરાવાર થોભીને તેનું ઐશ્વર્ય ઋદ્ધિસિદ્ધિ સમૃદ્ધિ જોતો જાજે. જે નગરીની દુકાનોમાં ઢગલા મોઢે રાખેલા, રત્નોથી અને તારા જેવા ચળકતા હીરાથી જડેલા, વચમાં વચમાં ગુંથેલી પારદની ગોળીયોથી ચમકતા કરોડો હાર, કરોડો શંખ છીપો, સ્હેજ કાળી ઝાંઇવાળા ઉગતા ખડના જેવા ઘેરા લીલા રંગનાં તથા જેમાંથી કિરણોની લહેરૂં શેડ્યું નીકળે છે એવાં કરોડો મરકત મણિ–પન્નાં તથા કિમતી પરવાળાની ડાંખળીયોના ઢગલા એ અને બીજાં પાણીવાર ઝવેરાત જેવાથી લાગે છે કે જાણે સમુદ્રોનું જળ આ રત્નોમાં જ જાણે પ્રવેશ્યું હોય તેવાં પાણીદાર કરોડો રત્નો ઉજ્જેન નગરીની દુકાનોમાં જોવામાં આવે છે, એવી ઉજ્જેન નગરીને જોઇને પછી આગળ ચાલજો॥૩૪

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ॥
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः ॥३५॥

पुनः उज्जयिन्याः प्राचीनेतिहासेन महत्वं वर्णयन्नाह प्रद्योतेति ।

हे मेघ, यत्र यस्यां उज्जयिनीनगर्याम् अवन्तीदेशे वत्सराजः वत्सदेशनृपः उदयनः प्रद्योतस्य प्रद्योतनाम्नः उज्जयिनीभूपतेः प्रियदुहितरं प्रियपुत्रीं वासवदत्तां जह्रे जहार । अत्र देशे तस्य प्रद्योतभूपतेः एव तालद्रुमवनं ताडवृक्षाणां अरण्यं हैमं सुवर्णमयं अभूत् । अत्र प्रदेशे किल अवश्यं नलगिरिः एतन्नामा महान् प्रचण्डकायः प्रसिद्धहस्ती दर्पात् गर्वपूर्वकं स्तम्भं उत्पाट्य भूम्या उद्धृत्य उद्भ्रांतः

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ॥
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
नीत्वा खेदं ललितवनितापादरागांकितेषु ॥३६॥

---

પુત્રી પ્રદ્યોત નરપતિની વત્સરાજે હરી તી
આંહીં તાડદ્રુમ વન હતું સ્વર્ણનું ભૂપતીનું ॥
આંહીં ગર્વે નલગિરિ ભમ્યો થાંભલાને ઉપાડી
યાત્રીઓને હરખ સમજૂ ભોમિયા ત્યાં પમાડે ॥૩૫॥

હવે ઉજ્જેન નગરીના પ્રાચીન ઇતિહાસથી તેના ગૌરવનું વર્ણન કરતો કહે છે.

હે મેઘ, જે ઉજ્જેન નગરીના અવંતી પ્રદેશમાં પ્રદ્યોત નામના ઉજ્જેનના રાજાની પ્રિય પુત્રી વાસવદત્તાનું વત્સરાજ—વત્સદેશનો રાજા ઉદયન, હરણ કરી ગયો હતો. આ પ્રદેશમાં એ પ્રદ્યોત રાજાનું સોનાનાં તાડવૃક્ષોનું વન હતું. આ પ્રદેશમાં જ પ્રચંડ શરીરવાળો મદોન્મત્ત નલગિરિ નામનો હાથી ગર્વ સાથે જમીનમાં ખોડેલા જબરજસ્ત થાંભલાને ખેંચી કાઢી ઉપાડી ચારેકોર ભમ્યો હતો. ઐતિહાસિક બનાવોને જાણનારા ભોમિયા માણસો ઉજ્જેનમાં યાત્રા કે દેશાટન કરવા આવનારા દેશદેશાંતરના બન્ધુઓને ઉપરની અને બીજી ઐતિહાસિક સત્ય ઘટનાની વાતું કરી ખુશી કરે છે. ॥૩૫॥

ડીલે થાતો બહુ નિકળતા કેશ સંસ્કાર ધૂપે
સત્કારાતો ભવન શિખિનાં નૃત્યથી બંધુ ભાવે ॥
માર્ગે થાકયો કુસુમ સુરભી ભવ્ય હર્મ્યો વિષે તું
વીસામો લૈ ચતુર યુવતીનાં પગે ત્રાંજવાં જ્યાં ॥૩૬॥

समन्तात् बभ्राम। यत्र उज्जयिन्यां आगन्तून् देशाटनार्थं यात्रार्थं देशान्तरादागतान् बन्धून् प्रजाजनान् अभिज्ञः जनः प्राचीनकथाकुशली मार्गदर्शको मनुष्यः इति उपर्युक्ताभिरन्याभिर्वा कथाभिः रमयति क्रीडयति रंजयति ॥३५॥

हे मेघ, अस्या उज्जयिन्याः कुसुमसुरभिषु पुष्पसमूहैः सुगन्धितेषु, ललित-वनितापादरागांकितेषु ललिता मनोहरा या वनिताः तरुण्यः तासां पादरागः चरणेषु अलक्तकारुणिमादिरंगैः अंकितानि चिन्हितानि येषु एतादृशेषु हर्म्येषु धवलगृहेषु जालोद्गीर्णैः जालाः जोलिकाः गवाक्षाः तासां विवराणि ताभ्यः जालाभ्यः उद्गीर्णाः निःसृताः तैः। केशसंस्कारधूपैः केशानां मूर्धजानां यः संस्कारः सौगंध्यप्रतिपादनक्रिया तदर्थं कृताः सुगन्धितपदार्थानां धूपाः तैः। उपचित वपुः पुष्टशरीरः। पुनः बन्धुप्रीत्या सुहृत्स्नेहेन भवनशिखिभिः हर्म्यमयूरैः दत्त-नृत्योपहारः दत्तः वितीर्णः नृत्यं एव उपहारः पूजा अतिथिसत्कारो यस्य सः। पुनः अध्वखिन्नान्तरात्मा मार्गपरिश्रमेण क्लिष्टचित्तः त्वं खेदं नीत्वा श्रमं नीत्वा व्यपनीय विश्रम्य पश्चात् शंकरस्य महाकालस्य स्थानं यायाः इति अग्रे सम्बन्धः ॥३६॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ॥
धौतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३७ ॥

उपर्युक्तप्रकारेण गतश्रमस्त्वं भर्तुः स्वस्वामिनः शंकरस्य कण्ठच्छविः इति कंठस्य एव छविः कांतिर्यस्यासौ शंकरकंठकांतिसदृशः श्यामवर्ण इति गणैः शंकरस्य गणैः भक्तैः सादरं सम्मानपूर्वकं वीक्ष्यमाणः त्वं, कुवलयरजोगन्धिभिः कुवलयानि नीलकमलानि तेषां रजः परागः तद्गंधिभिः तस्य गंधयुक्तैः। पुनः गंधवत्याः युवतीनां स्नानेन सुगन्धयुक्तायाः सिप्रानद्याः तोयक्रीडानिरतयुवतिस्नान-

---

હે મિત્ર, જાળીયુંમાંથી નીકળતા વાળને સુગંધી બનાવતા ધૂપ વડે પુષ્ટ થયેલો, મિત્રાચારીની પ્રીતિથી ઘરના પાળેલા મોરલાઓના નાચથી સત્કાર પામતો અને પંથ કાપવાથી થાકી ગયેલો એવો તું, આ ઉજ્જેન નગરીના પુષ્પોના સુગંધથી બહેકી રહેલાં, ચતુર જુવાન સ્ત્રીઓના પગમાં પાડેલાં અળતાના વાદળી રંગનાં અને લાખનાં લાલ રંગનાં ત્રાજવાંથી શોભતાં, આભ સાથે વાતું કરતાં વિશાળ મકાનોમાં વિસામો ખાઈ થાક ઉતારી પછી ભગવાન મહાકાળ શંકરના મંદિર તરફ જાજે. ॥ ૩૬ ॥

જોવાતો સાદર ગણવડે સ્વામિના કંઠ જેવો
જાજે ધામ ત્રિભુવન ગુરૂ પાર્વતીના પતીનું ॥
વાયૂઓથી કમળ રજના વ્યાપ્ત ઉદ્યાનવાળું
પાણી ક્રીડા મગન યુવતી સ્નાનના ગંધ વાળા ॥૩૭॥

तिक्तैः तोयस्य जलस्य या क्रीडा तस्यां निरताः मग्नाः युवतयः तासां स्नानैः तिक्तस्वादुसुरभयः येषां तैः । एतादृशैः मरुद्भिः पवनैः धौतोद्यानं धौतं व्याप्तं उद्यानं वनं यस्यासौ तं । त्रिभुवनगुरोः स्वर्गमृत्युपाताललोकानां स्वामिनः त्रैलोक्यनाथस्य चंडीश्वरस्य पार्वतीपतेः पुण्यं पवित्रं कल्मषापहारि धाम धर्मभवनं मंदिरं यायाः गच्छेः ॥३७॥

**अप्यन्यस्मिन् जलधर महाकालमासाद्य काले**
**स्थातव्यं ते नयनविषयं यावदत्येति भानुः ॥**
**कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-**
**मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥३८॥**

इदानीं महाकालमन्दिरे पुण्यप्राप्तिं वर्णयन्नाह । अप्यन्येति ।

हे मेघ अन्यस्मिन् अपि काले कस्मिंश्चिदपि समये मध्याह्नादौ मध्याह्नोत्तरे वा महाकालायतनं आसाद्य प्राप्य यावत् भानुः सूर्यः ते तव नयनविषयं दृक्पथं न अत्येति न अतिक्रामति न अस्तं गच्छति तावत् कालं तत्र त्वया स्थातव्यं रहितव्यं । संध्याबलिपटहतां कुर्वन् प्रतिदिनं सध्यायां सायंकाले शूलिनः महादेवस्य संपाद्यमानः बलिः पूजानैवेद्यादिविधिः तन्निमित्तं श्लाघनीयां प्रशस्यां सुंदरां पटहतां पटहः भेरी नगारां नामकवाद्यविशेषः तद्भावं कुर्वन् आमन्द्राणां गंभीराणां गर्जितानां अविकलं समस्तं फलं लप्स्यसे प्राप्स्यसे ॥३८॥

---

હે મિત્ર, તું ઉજ્જૈન નગરીમાં આગળ ચાલીશ ત્યારે પોતાના ઇષ્ટદેવ શંકરના ગળાંનાં જેવા રંગનો આ મેઘ છે એમ કહી શંકરના ગણો—ભક્તો તારા પ્રત્યે માનથી જોશે. નીલ કમલનાં પરાગની સુગંધવાળા, તથા સુગંધમય થયેલી એવી સિપ્રા નદીના જળમાં નહાવાની રમતમાં મગ્ન થયેલી જુવાન સ્ત્રીઓના નહાવાથી કડવા સ્વાદવાળા બનેલા વાયુઓ વડે જેના બગીચાઓ વ્યાપી રહ્યા છે એવા, ત્રણે લોકના ગુરૂ ઇષ્ટદેવ ત્રણે લોકમાં પૂજાતા પાર્વતીના પતિ શ્રી મહાકાલેશ્વર ભગવાન શંકરના પવિત્ર પુણ્યકારી એવા મંદિરમાં જાજે ॥૩૭॥

જો વ્હેલો તૂં જળધર મહાકાળના મંદિરે જા
થોભી જાજે રવિ નયનથી દૂર થૈ અસ્ત પામે ॥
સંધ્યાટાણે શિવ બલિ સમે તું નગારાં બનીને
પ્રેમેં સારૂં ફળ સરસ તું પામશે ગર્જનાનું ॥૩૮॥

હે મેઘ તું ભગવાન મહાકાળને મંદિરે બપોરે બપોર પછી કે ગમે તે વખતે પહોચ તરત ત્યાંથી વયો જાઇશ માં, પણ સૂરજ આથમી જાય ત્યાં સુધી સંધ્યાટાણા સુધી ત્યાં રોકાઇ જાજે. કારણ સંધ્યાટાણે ભગવાન્ શંકરને પૂજા નૈવેદ્ય આરતી થાય છે ત્યારે નગારાં વાગે છે તે કામ સુંદર રીતે તું કરજે, તેથી તેં આજ સુધીમાં જે ગંભીર ગર્જનાઓ કરી હશે તેનું સંપૂર્ણ ફળ પુણ્ય તું મેળવીશ. ॥૩૮॥

पादन्यासक्वणितरसनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ॥
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥३९॥

इदानीं महाकालमन्दिरे ऐहिकफलप्राप्तिमप्याह । पादेति ।

हे मित्र, तत्र महाकालमन्दिरे तदा संध्यासमये पूजावसरे वेश्याः स्त्रियः देवविलासिन्यः त्वयि कटाक्षान् मोक्ष्यन्ते भवन्तं कटाक्षैः अवलोकयिष्यन्ति इति वर्णयति । पादन्यासक्वणितरसनाः पादन्यासैः चरणनिक्षेपैः क्वणिताः ध्वनिताः रसनाः कटिमेखलाः पादझांझराः यासां ताः । लीलावधूतैः लीलया विशेषाभिनयेन अवधूतैः आन्दोलितैः । रत्नच्छायाखचितवलिभिः रत्नानां छायाभिः शोभाभिः खचिता व्याप्ता वलयः दण्डा येषां तैः । वलिश्चामरदण्डोपि गृहदारु प्रसंश्रये ॥ एतादृशैः चामरैः क्लान्तहस्ताः मुहुश्चामराणां विशेषलीलया आन्दोलनेन क्लान्ताः श्रान्ता हस्ताः यासां ताः वेश्याः देवविलासिन्यः त्वत्तः त्वत्समीपात् नखपदसुखान् वल्लभकृतनखक्षत-स्थानसुखकारिणः वर्षाग्रबिन्दून् प्रथमजलकणान् आसाद्य प्राप्य ताः मधुकरश्रेणि-दीर्घान् भ्रमरावलिगुरुतरान् कटाक्षान् त्वयि मोक्ष्यन्ते भवन्तं कटाक्षैः अवलोकयिष्यन्ति ॥३९॥

---

પેની ધ્રબ્કયે રણકતિ કટી મેખળા ચિત્ર નૃત્યે
રત્નો જોડ્યાં સરસ ચમરો ઢાળિ થાકી ગયેલી ॥
વૈશ્યા પામી નખક્ષત વિષે વૃષ્ટિનાં બિંદુ તૂંથી
જાણે હાર્યું મધુકર તણી ફેંકશે તે કટાક્ષ ॥૩૯॥

હવે મહાકાળના મંદિરે આ લોકનું સુખ પણ તુંને મળશે એમ કહે છે.

હે મિત્ર, ત્યાં મહાકાળના મંદિરમાં પગના પછડાટથી જેની કટિમેખળા અને પગનાં ઝાંઝર રણકારા કરે છે એવી અને જડેલાં રત્નોના પ્રકાશથી શોભતા દાંડાવાળાં ચામર અમુક પ્રકારના અભિનય સાથે ઢોળવાથી જેના હાથ થાકી ગયા છે એવી, વેશ્યાઓ દેવવિલાસિની સ્ત્રીઓ, પ્રિયના નખના ક્ષતવાળાં અંગને સુખ આપનારા, તેં વરસાવેલા જળના નવા છાંટાઓ પોતાપર પડવાથી ભમરાની હારું જેવાં કટાક્ષોથી તારી સામું જોશે. ॥૩૯॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ॥
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥४०॥

इदानीं गौरीसमाधानप्रकारान्तरमप्याह । पश्चादिति ।

हे मेघ, पश्चात् बलिपूजाऽऽरार्तिकक्रियासमये पटहरूपां कर्णमधुरगर्जनादिकरणानन्तरं पशुपतेः शंभोः नृत्यारंभे ताण्डवप्रारंभे नर्तनावसरे उच्चैर्भुजतरुवनं उच्चैः ऊर्ध्वीकृताः भुजा एव तरवः तेषां वनं मण्डलेन मण्डलाकारेण प्रतिबिम्बेन अभिलीनः आश्रितः। पुनः विकसितजपापुष्परक्तं विकसितं उन्निद्रं यज्जपाकुसुमं तद्वत् रक्तं लौहित्यं सान्ध्यं संध्याकालीनं तेजः दधानः बिभ्राणः। पुनः शान्तोद्वेगस्तिमितनयनं शान्तः उद्वेगो गजचर्मावलोकनभयं ययोस्ते अत एव स्तिमिते निश्चले नयने यस्मिन् कर्मणि यथा स्यात् तथा भवान्या पार्वत्या दृष्टभक्तिः दृष्टा भक्तिर्यस्य सः ईदृशः त्वं आर्द्रनागाजिनेच्छां हर। आर्द्रं शोणितार्द्रं यत् नागाजिनं तस्य इच्छां रुधिरक्लिन्नगजासुरचर्माभिलाषं हर प्रापय पूरय ॥ ४० ॥

---

ઉંચા હાથે તરૂવન સમા માં પછી લીન થાતો
સંધ્યાટાણે દ્યુતિ નવ જપા પુષ્પ જેવી ધરીને ॥
નૃત્યારંભે અજીન શિવનું પૂર્ય ઈચ્છા પલાળી
જોશે તૂંને સ્થિર નયનથી પાર્વતી ભક્તિવાળો ॥૪૦॥

હે મેઘ, ભગવાન મહાદેવની પૂજા આરતી સમયે સુંદર ગર્જનાથી નગારાનું કામ કર્યા પછી ભગવાન શંકરના તાંડવ નૃત્યના આરંભ વખતે શંકરે ઉંચા કરેલા હાથરૂપી વૃક્ષોના વનમાં ગોળાકાર પ્રતિબિંબ રૂપે રહેલો એવો, તથા ખીલેલાં જાસુદનાં ફુલ જેવું સંધ્યાટાણાનું લોહી જેવું લાલચોળ સ્વરૂપ ધારણ કરતો એવો, શંકરે પહેરેલા હાથીના ચામડાને જોવાનો ઉદ્વેગ મટવાથી સ્થિર નેત્રે જોઇ રહેલાં પાર્વતીયે જેની ભક્તિ જોઈ છે એવો તું શંકરે પહેરેલા ગજચર્મને ભીનું તથા લોહી ટપકતું લાલ કરવાની શંકરની ઇચ્છા પૂરી કર. અર્થાત તું સંધ્યાટાણાનું લાલ હીંગળા જેવું સ્વરૂપ ધારણ કરી, નૃત્ય કરતા શંકરની ચારેકોર કુંડાળાની પેઠે ઘેરી બેસીશ એટલે શંકરે પહેરેલા ગજચર્મ ઉપર લાલ પ્રતિબિંબ પડતાં અને તેના પર તું વરસાદના છાંટા નાખીશ એટલે તે ભીનું થાશે એટલે તે લોહીથી તરબોળ થયું હોય એવું દેખાશે. તેથી ગજાસુરને તરતમાં હણીને તેનું તાજું ચર્મ શંકરે પહેર્યું છે એવો ભાસ તેને થાશે તે દ્રશ્ય જોવાથી પાર્વતીનો ગભરાટ ઉદ્વેગ શાંત થશે અને એ રીતે તારી ભક્તિ જોઈ પાર્વતી પણ તારા ઉપર પ્રસન્ન થાશે. ॥૪૦॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥४१॥

हे मेघ, तत्र उज्जयिन्यां नक्तं रात्रौ सूचिभेद्यैः अतिगहनैः तमोभिः अन्धकारैः रुद्धालोके रुद्धः निरुद्धः स्तम्भितः आलोकः दृष्टिप्रसारः यस्मिन् सः तस्मिन् एतादृशे नरपतिपथे राजमार्गे रमणवसतिं वल्लभावासं गच्छन्तीनां प्रयान्तीनां कनकनिकषस्निग्धया कनकस्य निकषः अतिकृष्णः कसोटी पाषाणः तस्योपरि कृता या स्निग्धा प्रकाशमाना रेखा यया, स्वर्णरेखायुक्तकसोटीपाषाण मनोज्ञया सौदामिन्या विद्युता उर्वीम् पृथ्वीं दर्शय गमनमार्गं दर्शय। तदा विद्युता मार्गदर्शनसमये तोयोत्सर्गस्तनितमुखरो मा स्म भूः, तोयस्य जलस्य उत्सर्गः छांदनं तद्युक्तं यत् स्तनितं गर्जनं तेन मुखरः वाचलः शब्दायमानः मा स्म भूः। कुतः वृष्ट्या गर्जितेन च ताः योषितः विक्लवाः भीरवः स्युः भविष्यन्ति। अथवा ताः विक्लवाः भीरवः सन्ति, पुनः अंधकारं ताः भयाकुलाः कुर्वन्ति तदा तव वृष्ट्या गर्जनया च विशेषभयाकुलाः भविष्यन्ति, अतस्त्वं ताः विद्युता राजमार्गं दर्शयन् वर्षणयुक्तां गर्जनां मा कुरु ॥ ४१ ॥

---

રાતે જાતી પ્રિય સદનમાં ત્યાં સ્ત્રિયો રાજમાર્ગે
રોક્યાં જ્યોતિ નયન રજની ઘોર એ અંધકારે ॥
સોના જેવી વિજળિ ઝબકારે જ દેખાડ્ય માર્ગ
બીશે સ્ત્રીઓ વરસિશ અને કાંઈ ગર્જીશ જો તૂં ॥ ૪૧ ॥

હે મેઘ, ત્યાં ઉજ્જેન નગરીમાં મેઘલી અંધારી રાતે સળી સંચરે નહી એવા ઘાટા અંધારાથી કાંઇ જોઇ શકાતું નથી એવા રાજમાર્ગે પોતાના પ્રિય પાંસે જાતી સ્ત્રીઓને કસોટીનાં લીસા કાળા પત્થર ઉપર સોનાના કસના લીંટા હોય તેવા વિજળીના ઝબકારા કરીને માર્ગ બતાવજે ત્યારે ભલો થઇને તું પાણી છાંટીશ માં અને ગર્જના પણ કરીશ માં. તેમ કરવાથી તે સ્ત્રીઓ બીશે. તે સ્ત્રીઓ બીકણુ તો છે તેમાં રાતનાં અંધારાથી તે વધુ બીતી હશે તેમાં તું વરશીને ગાજીશ તો ઘણી જ ભય પામશે. ગભરાઇ જાશે માટે મુંગો રહી વીજળીના ઝબકારાથી માર્ગ બતાવજે ॥૪૧॥

तां कस्यांचिद् भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ॥
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥४२॥

इदानीं अग्रतो गमनाय मेघं अभ्यर्थयन्नाह । तामिति ।

हे मेघ, । चरविलसनात् चिरं बहुसमयपर्यन्तं तया सह विलसनं विलासः क्रीडा तस्मात् खिन्नविद्युत्कलत्रः खिन्ना श्रान्ता विद्युत् एव कलत्रं प्रिया यस्य सः भवान् कस्यांचित् सुप्तपारावतायां सुप्तानि निद्रायितानि पारावतानि यस्यां सा तस्यां भवनवलभौ सौधधवलगृहोपरिभूमिकायां तां रात्रिं नीत्वा सूर्ये दृष्टे सति सूर्योदये जाते सति पुनः अपि अध्वशेषं वाहयेत् अवशिष्टं मार्गं उल्लंघयेत् ततः पुनः प्रयाणं कुरु । सुहृदां मित्राणां अभ्युपेतार्थकृत्याः अभ्युपेतं स्वीकृतं अर्थकृत्यं निर्धारितकार्यं यैस्ते, अंगीकृतकार्यनिष्पादनोत्सुकाः पुरुषाः न मन्दायन्ते न शिथिलीभवन्ति न विलम्बन्ते ॥४२॥

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ॥
प्रालेयास्रं कमलवदनात् सोपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥४३॥

---

પારેવાંઓ ભવન છતમાં જ્યાં સુતાં છે સુખેથી
ગાળી રાત્રી બહુ રમણથી ખિન્ન વિદ્યુત્ વધૂ થી ॥
બાકી માર્ગે વિચર જલદી સૂર્ય ઊગ્યા પછીથી
સ્નેહી કાર્યો લઈ શિર વિષે થાય ઢીલા ન મર્દો ॥૪૨॥

હે મેઘ ઘણો વખત તારી સાથે વિલાસ કરવાથી તારી સ્ત્રી વીજળી પણ થાકી ગઇ હશે એટલે તું પછીથી આખી રાત ગગનચુંબી મકાનોની અગાશીવાળી છાહલીયો કે જેમાં પારેવાં પોતપોતાના માળામાં સુતાં હશે ત્યાં આખી રાત રહી સૂરજ ઊગ્યે ફરી આગળ જાવા માટે માર્ગે ચાલતો થાજે. કારણ સ્વીકારેલા કામ કરવામાં ઉત્સાહી પુરૂષો મિત્રોનું કામ માથે લીધા પછી તે પાર પાડવામાં ઢીલા પડતા નથી ॥૪૨॥

ભાનૂ ઊગ્યે નયનજલને ખંડિત સ્ત્રીજનોના
પ્રેમીઓયે શમન કરવા સૂર્યનો માર્ગ છોડ્ય ॥
લૂવા આંસુ નલિનિ મુખથી સૂર્ય આવ્યો ફરીને
તેનાં જો તૂં કિરણ અટકાવીશ તો કોપશે તે ॥૪૩॥

हे मेघ, तस्मिन् काले प्रभातसमये तव प्रयाणसमये प्रणयिभिः वल्लभैः खण्डितानां भुक्तानां योषितां स्त्रीणां नयनसलिलं नेत्रजलं शांतिं नेयं शमनीयं स्यात्, अतः कारणात् त्वं भानोः वर्त्म सूर्यस्य मार्गं आशु शीघ्रं त्यज सूर्याच्छादको मा भूः। सोपि भानुः अपि नलिन्याः पद्मिन्याः कमलवदनात् पद्मवक्त्रात् प्रालेयास्रं प्रालेयं तुषारं तदेव अस्रं अश्रु जलं हर्तुं प्रत्यावृत्तः पुनरागतः त्वयि कररुधि किरणरोधिनि सति अनल्पाभ्यसूयः अनल्पा अधिका अभ्यसूया विद्वेषः प्रकोपः यस्यासौ स्यात् भविष्यति ॥४३॥

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशं ॥
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४४ ॥

इदानीं मार्गे आगतायाः गंभीरानाम नदीरूपिणीनायिकायाः संयोगलाभं वर्णयन्नाह। गंभीरेति। हे मेघ, कस्यचित् प्रकृतिसुभगस्य स्वभावसुन्दरस्य पुरुषस्य छायात्मापि चित्रादिलिखितरूपमपि गंभीरायाः अप्रकटितमनोभवायाः स्त्रियाः प्रसन्ने प्रीतियुक्ते सानुरागे चेतसि मनसि प्रवेशं लभते प्रविशति। तद्वत् तव मार्गे आगतायाः गंभीरानाम नद्याः प्रसन्ने अतीव निर्मले पयसि जले प्रवाहे ते तव प्रकृतिसुभगः स्वभावसुन्दरः छायात्मापि छायास्वरूपी आत्मा अपि प्रवेशं लप्स्यते प्रवेशं प्राप्स्यते। तस्मात् छायाद्वारा गंभीरायाः तव स्त्रियाः प्रवाहे त्वया लब्धसंयोगत्वात् अस्याः कुमुदविशदानि कमलवत्

---

હે મેઘ, સવારે તારા વિદાય થવાને વખતે સૂર્યના ઉદયની આડો આવીશ માં. જટ રવાના થાજે. કારણ વહાલાઓએ ખંડિત કરેલી સ્ત્રીઓની આંખ્યું ઉપર સૂર્યનો તડકો પડવાથી આંખ્યુંનાં પાણી જટ સુકાઇ જાય એમ તેઓ ઇચ્છતી હોય છે, તેમ આથમ્યા પછી પાછો ઉગતો સૂરજ પોતાની સ્ત્રી પદ્મિની કમળવેલના મુખ ઉપર જામેલાં (પાન અને ફુલપર રાતના બાઝેલાં) પાણીના બિંદુઓ રૂપી આંસુને સુકાવવા માટે પોતાનાં કિરણ ફેંકવાની ઉતાવળમાં હશે તેમાં તું સૂર્ય આડો આવી વિઘ્ન રૂપ બનીશ માં, તેમ કરીશ તો સૂરજ તારા પર ઘણો રોશ કરશે કોપશે. ॥૪૩॥

ગંભીરાનાં વિશદ જળમાં પ્રેમિ જેમ પ્રિયામાં
છાયા રૂપે મનહર જ તૂં પામશે ત્યાં પ્રવેશ ॥
માટે આનાં કમળ સરખાં વક્ર એ પ્રેક્ષિતોને
મત્સ્યોનાં નિષ્ફળ ન કરજે ધૈર્યથી બિંદુ છાંટી ॥ ૪૪ ॥

प्रकाशितानि मुक्तासमानकांतियुक्तानि चटुलशफरोद्वर्तनप्रेक्षितानि चटुलानि चंचलानि गमनागमनक्रियया अस्थिराणि शफराणां मत्स्यानां उद्वर्तनयुक्तानि प्रेक्षितानि चपलमत्स्यपरावर्तविलोकितानि त्वदागमनेन वर्षाबिन्दुप्रपातोत्सुकानि मोघीकर्तुं निष्फलानि निरुत्साहानि कर्तुं न अर्हसि। धैर्यात् अल्पसमयं धैर्यमवलंब्य वृष्ट्या सफलीकृत्वा पश्चादग्रतो यायाः इति भावः ॥ ४४ ॥

तस्याः किंचित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितंबं ॥
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विपुलजघनां को विहातुं समर्थः ॥४५॥

इदानीं भूयोपि तस्या विलासैः पयोदं प्रलोभयन्नाह। तस्या इति।

हे सखे, हे मित्र प्राप्तवानीरशाखं प्राप्ताः वानीरशाखाः वेतसशाखाः एव हस्ताः यस्य तत्। अत एव किंचित् शिथिलं मंदवेगवत्। अतएव करधृतं इव हस्तावलम्बितं इव स्थितं। नीलं अगाधत्वात् कृष्णाभासं। पुनः मुक्तरोधोनितम्बं मुक्तः नग्नः रोधः तटप्रदेश एव नितम्बः कटिपश्चाद्भागः येन तत् एतादृशं तस्याः गंभीरायाः सलिलं एव वस्त्रं पानीयवस्त्रं हृत्वा पश्चात्कृत्य लंबमानस्य अधोगतस्य ते तव प्रस्थानं गमनं प्रयाणं कथमपि महता कष्टेन भावि। ज्ञातास्वादः आस्वादितरसः सन् विपुलजघनां विपुला विस्तीर्णा पुष्टा कटितटी यस्यास्तां स्त्रियं विहातुं कः पुरुषः समर्थः स्यात् न कोपि ॥४५॥

---

હે મેઘ, ગંભીર સ્વભાવની પોતાના મનમાં ઉત્પન્ન થયેલા કામને બહાર ન જણાવા દેતી એવી સ્રીના પ્રીતિવાળા ચિત્તમાં સ્વાભાવિક રીતે જ રૂપાળા પુરુષનું છબીમાં આળખેલું રૂપ પ્રવેશે છે તેમ તને રસ્તામાં આવતી ગંભીરા નામની નદીના નિર્મળ જળમાં સ્વાભાવિક રીતે સુંદર એવો તારી છાંયા રૂપી આત્મા પેસશે. એ રીતે તારો અને નદીનો પતિ પત્ની રૂપે સંયોગ થવાથી, કમળની પેઠે પ્રકાશતાં મોતી જેવી કાંતિવાળાં, તારા આવવાથી વરસાદના છાંટાની આશાયે પાછું વાળીને તારા તરફ જોતાં ચંચળ માછલાનાં અવલોકનોને નિરાશ કરીશ માં. થોડીવાર થોભી જઇને તેનાપર વરસાદ વરસાવીને પછી આગળ જાજે. ॥ ૪૪ ॥

તેનૂં કાંઈ જ્યમ કરધર્યું નેતરો ડાળ્યવાળું
ખેંચી કાળા જળ વસનને ત્યક્તકાંઠો નિતંબ ॥
તારૂં થાશે ગમન જ વિલંબે સખે સ્વાદ ચાખી
સ્વાદજ્ઞાતા વિપુલ જઘના કોણ છોડે પ્રિયાને ॥ ૪૫ ॥

त्वन्निष्पन्दोच्छ्वसितवसुधागंधसम्पर्करम्यः
स्रोतोरंध्रध्वनितसुभगं दंतिभिः पीयमानः ॥
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शान्तो वायुः परिणमयिता काननोदुम्बराणां ॥४६॥

इदानीं अनुकूलवायोराश्लेषं सूचयन्नाह । त्वन्निति ।

हे मेघ. त्वन्निस्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः तव यः निस्यन्दः जल वर्षणं तेन उच्छ्वसितायाः बाष्पं उद्गमं तस्याः वसुधायाः सुगंधस्य संसर्गेण रमणीयः मनोज्ञः । पुनः दंतिभिः हस्तिभिः स्रोतोरन्ध्रध्वनित सुभगं स्रोतसां रन्ध्राणि नासिका छिद्राणि तैः यत ध्वनितं शब्दितं तेन सुभगं मनोहरं यथा स्यात् तथा पीयमानः । पुनः काननोदुम्बराणां वनेषु स्थिता उदुम्बरवृक्षा तेषां फलानि उंबराणि अंजीराणि परिणमयिता पाचयिता पक्वानि कुर्वन् एतादृशः शान्तः शीतलः वायुः देवपूर्वं गिरिं देवगिरिं नामानं पर्वतं प्रति जिगमिषोः यियासोः गन्तुमुत्सुकस्य ते तव नीचैः वास्यति शनैः शनैस्त्वां वीजयिष्यति ।४६॥

---

હે મિત્ર કાંઠે ઉભેલા નેતરનાં ઝાડરૂપી હાથવાળું, તેથી કાંઇક ધીમા વેગવાળું થવાથી જાણે કેમ કોઇએ હાથથી પકડી રાખ્યું હોય એમ લાગતું, ઘણા ઉંડાણને લઈ કાળું ભમર દેખાતું, ઉઘાડો કરેલ છે કાંઠાનો પ્રદેશ રૂપી નિતંબ ભાગ જેણે એવું તે ગંભીરા નદીનું પાણી રૂપી વસ્ત્ર ખેંચી લઇને નીચે આવેલો એવો તું ત્યાંથી બહુ મુશ્કેલીએ પ્રયાણ કરી શકીશ એમ માનું છું. ખસી ગયેલાં લુગડાંવાળો કટિની નીચેનો ભાગ જેનો પુષ્ટ અને ઘાટીલો છે એવી સ્ત્રીને કયો પુરુષ તજી શકે? ॥ ૪૫ ॥

તારે વર્ષ્યે ઉપસતિ મહી ગંધ સંસર્ગવાળો
પીવાતો જે સ્વર મધુરથી સુંઢયથી હાથિઓની ॥
ધીમો વાસ્યે પવન ગિરિ કાર્યે જતા દેવના ત્યાં
ઠંડો તૂંને, ઝટ પકવતો ઊંબરાંને વનોનાં ॥૪૬॥

હે મિત્ર તું દેવગિરિ તરફ જાવાની તૈયારી કરીશ ત્યારે, તેં વરસાવેલું પાણી પડવાથી પૃથ્વીમાંથી નિકળતી ઉની સુંગંધ સાથે ભળવાથી મનને આનંદ આપનારો, સૂંઢયૂંના છિદ્રોમાંથી જે શબ્દો નિકળે છે તેથી સુંદર લાગતો હાથીઓ સુંઢયું વાટે પીયે છે-સુંઘે છે-ખેંચે છે અને પછી પાછો કાઢે છે એ ક્રિયાવડે થતા શબ્દોથી સુંદર દેખાવ જ્યાં થઇ રહ્યો છે એવો અને જંગલોનાં ઉંબરાનાં ફળને પકવતો એવો શીતળ પવન તુંને ધીમે ધીમે વાહર નાખશે. ॥૪૬॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगंगाजलार्द्रैः ॥
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥४७॥

इदानीं तत्र देवगिरौ स्कन्ददेवस्य पूजनलाभं वर्णयन्नाह । तत्रेति ।

हे मेघ, तत्र देवगिरौ नियतवसतिं निश्चितनिवासं सदा सन्निहितं स्कन्दं कुमारं कार्तिकस्वामिनं पुष्पमेघीकृतात्मा पुष्पाणां मेघः जलदः पुष्पमेघः तद्रूप एव कृतः आत्मा स्वरूपं येन सः ईदृशः भवान् व्योमगंगाजलार्द्रैः आकाशगंगायाः जलैः आर्द्राः पुष्पाणां आसाराः प्रवृष्टयः तैः पुष्पासारैः स्नपयतु अभिषिंचेत् । वासवीनां ऐन्द्रीणां चमूनां इन्द्रस्य सेनानां रक्षाहेतोः रक्षानिमित्तं नवशशिभृता

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ॥
धौतापांगं हर शशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥४८॥

---

ત્યાં પુષ્પોથી સતત વસતા સ્કંદને તૂં કરાવ્ય
પુષ્પો વર્ષી નભ સરિતનાં સ્નાન ભીનાં જળોથી ॥
રક્ષા માટે શશિધર શિવે ઇંદ્રસેના તણી ત્યાં
તે છે મૂક્યું હુતવહ મુખે સૂર્યથી શ્રેષ્ઠ તેજ ॥૪૭॥

હે મેઘ, તે દેવગિરિમાં હમેશાં રહેનારા કાર્તિક સ્વામીની ફુલનાં વાદળાનું સ્વરૂપ ધારણ કરીને આકાશ ગંગાનાં જળથી ભીનાં થયેલાં એ ફુલની વૃષ્ટિ કરી પૂજા કરજે. ઇન્દ્રની સેનાઓની રક્ષા કરવા બીજના ચંદ્રને ધારણ કરતા શંકરે અગ્નિના મુખમાં મુકેલું જે પોતાના વીર્યરૂપી તેજ એજ આ સ્કંદ કાર્તિક સ્વામી છે. અસાધારણ શક્તિ ધારણ કરનારા એવા કાર્તિક સ્વામીને પૂજવાથી તારી આગળની મુસાફરી વિઘ્ન વિનાની બનશે. ॥૪૭॥

પીછું જેનું સરતું ગિરિજા તેજ રેખા રૂપાળું
પુત્ર પ્રેમેં કમળદળથી શ્રેષ્ઠ કાનેં ધરે છે ॥
ધોયાં નેત્રો શશિજલવડે સ્કંદના મોરલાનેં
પદ્છંદાથી બહુ નચવજે ગર્જનાથી ગિરીના ॥૪૮॥

नवः द्वितीयायाः यः [illegible] चंद्रः तं [illegible] धारयता चन्द्रमौलिना हुतवहमुखे अग्निमुखे संभृतं धृतं यत् तेजः [illegible] तस्मै [illegible] भगवान् स्कन्दः [illegible]। तारकासुर[illegible] [illegible] पुत्रमुत्पादयतो तद्धाम वीर्यं धर्तुं अशक्नुवन्त्यां तस्यां [illegible] [illegible] शिखिवाहनः अग्निभूरित्यामनन्ति । तदेन[illegible] कुमार[illegible] शिवाः सन्तु पन्थान इति ॥ ४७ ॥

हे मेघ, यस्य मयूरस्य ज्योतिर्लेखावलयि, ज्योतिषः तेजसः लेखाः पंक्तयः तासां वलयानि चन्द्रिकाणि विद्यन्ते यस्य तत् एतादृशं [illegible] स्वयमेव पतितं न बलादुद्धृतं । पुनः कुवलयदलस्पर्धि नीलोत्पलदलेन [illegible] स्पर्धते इति ईदृशं बर्ह पिच्छं भवानी पार्वती पुत्रप्रेम्णा पुत्रस्नेहेन पुत्र[illegible] [illegible] करोति स्वकर्णे धारयति । स्वपुत्रस्यायं मयूरो [illegible] [illegible] पुत्रस्नेहेन कर्णोपरि धारयति । पश्चात् पुष्पवर्षया [illegible] [illegible] [illegible] चंद्रः तस्य रुक् चन्द्रिका ततः निर्गताम्बुलवेन [illegible] पावकेः [illegible] अग्नेः अपत्यं पुमान् पावकिः स्कन्दः तस्य [illegible] मयूरं [illegible] देवगिरि-पर्वतस्य ग्रहणं प्रतिच्छन्दः [illegible] [illegible] [illegible] नर्तयेथाः नाटयेथाः ॥४८॥

आराध्यैनं शरवणभवं देवमुल्लंघिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ॥
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥४९॥

इदानीं देवगिरिं त्यक्त्वाग्रे प्रयातस्य [illegible]। आराध्येति ।

हे मेघ, शरवणभवं शराणां वनं [illegible] [illegible] तं देवं भगवन्तं एनं स्कन्दं, आराध्य संगीतादिभिः [illegible] [illegible] स्वस्थानं प्रयातैः वीणिभिः वीणाभिः [illegible] संयुक्तैः सिद्धद्वन्द्वैः [illegible] [illegible] वीणोपरि तोयबिन्दुपतनभयात् मुक्तमार्गः परित्यक्तपंथाः यस्य सः । पुनः

---

હે મેઘ રંગ બેરંગી તેજની કાંયુંના કુંડાળાવાળું ચંદ્રિકાવાળું પોતાની મેળે ખરેલું, નીલ કમળની સાથે બરોબરી કરતું એવું એ કાર્તિક સ્વામીના મોરના પીછાને પુત્ર ઉપરના હેતથી પાર્વતી કાનપર ધારણ કરે છે. કાર્તિક સ્વામીની પૂજા કર્યા પછી ચંદ્રની જ્યોત્સ્નામાંથી ઝરતા અમૃત જળથી જેની સફેદ આંખ્યો ધોવાય છે એવા કાર્તિક સ્વામીના એ મોરને દેવગિરિના પડછંદાથી વધતી એવી તારી ગર્જનાઓ વડે નચવજે. ॥૪૮॥

આરાધીને શિવ તનુજને માર્ગ ઉલ્લંઘિને તું
વીણા ધારી જળ ભય થકી સિદ્ધ સૌ માર્ગ છોડે ॥
આશ્રો લેજે સુરભિતનયા જન્ય ચર્મણ્વતીને
સન્માનીને યશ અવનિમાં રંતિદેવ પ્રભૂનાં ॥ ૪૯ ॥

उल्लंघिताध्वा अतिक्रान्तमार्गः देवगिरिं त्यक्त्वा अग्रतो गतः । पुनः सुरभितनया-लम्भजा सुरभितनयानां गवां आलम्भः यज्ञः तस्माज्जाता स्रोतोमूर्त्या नदीरूपेण भुवि पृथिव्यां परिणतां विस्तृतां रन्तिदेवस्य दशपुराधीशस्य कीर्तिं कीर्तिरूपेण स्थितां विद्यमानां चर्मण्वतीनाम्नां प्रथितां नदीं मानयिष्यन् सत्करिष्यन् सन् व्यालम्बेथाः भजेथाः तां गच्छेः इत्यर्थः ॥ ४९ ॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहं ॥
प्रेक्षिष्यन्ते गगनगतयो दूरमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलं ॥५०॥

हे मेघ, शार्ङ्गिणो वर्णचौरे विष्णुवर्णानुकारिणि त्वयि तस्याः चर्मण्वती नाम्न्याः सिन्धोः नद्याः जलं आदातुं गृहीतुं त्वयि अवनते नम्रीभूते सति, पृथुं अपि विस्तीर्णं अपि दूरभावात् विप्रकृष्टत्वात् तनुं लघुं प्रवाहं गगनगतयः आकाशगामिनो देवाः दूरं यावत् दृष्टीः आवर्ज्य प्रसार्य स्थूलमध्येन्द्रनीलं मध्य-श्चासौ इन्द्रनीलश्च मध्येन्द्रनीलः स्थूलो मध्येन्द्रनीलो यस्य सः तं एतादृशं एकं मुक्तागुणं इव मुक्तानां एकावलीहारमिव प्रेक्षिष्यन्ते साश्चर्यं अवलोकयिष्यन्ते ॥५०॥

---

હે મેઘ, ભગવાન્ કાર્તિક સ્વામીની સંગીતાદિથી સ્તુતિ કરીને આકાશ માર્ગે પોતાને સ્થાને જાતાં સિદ્ધ પુરૂષોનાં વીણાધારી જોડલાં–દંપતીઓ, વીણાપર વરસાદના છાંટા પડવાની બીકે તારે ચાલવાનો માર્ગ છોડી બીજે માર્ગે જાશે. તું દેવગિરિ છોડી આગળ ચાલીશ- એટલે કામધેનુની પુત્રી ગાયુંના યજ્ઞના પ્રભાવથી નદી રૂપે થયેલી દશપુરના રંતિદેવ રાજાની કીર્તિનું સ્મરણ કરાવતી ચર્મણ્વતી નદીને પ્રણામ કરીને પછી તેનું પાણી લેવા નીચે ઉતરજે. ॥ ૪૯ ॥

તું લેવાને નમિશ જળને કૃષ્ણના વાન જેવો
લાંબૂ વેન સ્થુળ બહુ છતાં પાતળું તે જણાશે ॥
જોશે દેવો ગગન ફરતા દૂરથી દૃષ્ટિ ખેંચી
મોતીમાળા જડિત વચમાં શોભતો ઇંદ્રનીલ ॥૫૦॥

હે મેઘ, વિષ્ણુના જેવા શ્યામ રંગનો એવો તું ચર્મણ્વતી નદીનું પાણી લેવા નીચો નમીશ ઉતરીશ ત્યારે એ નદીનો પ્રવાહ વિશાળ લાંબો પહોળો છતાં, છેટેથી નજર ખેંચીને જોતા આકાશમાં ફરતા એવા દેવતાઓને નાનો સાંકડો લાગશે. મોતીના હારની વચમાં જડેલું મોટું નીલમ–ઇંદ્રનીલમણિ શોભે તેમ તારાથી શોભતા એ પ્રવાહને આશ્ચર્યથી તેઓ જોશે ॥૫૦॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणां ॥
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानां ॥५१॥

इदानीं पथि नगरयुवतीनयनविलासमुपलक्ष्य दर्शयन्नाह । तामिति ।

हे मेघ, तां चर्मण्वतीं उत्तीर्य प्रतीर्य परिचितभ्रूलताविभ्रमाणां परिचिताः प्रति वर्षं गमनागमनेन पूर्वत एव परिचिताः भ्रुवः भ्रुकुट्यः लता लहर्यः तासां विलासाः येषु तेषां । पक्ष्मोत्क्षेपात् पक्ष्मणां उत्क्षेपात् नयनावलीरोम्णां उद्घाटनात् निमेषोन्मेषकरणात् उपरि ऊर्ध्वभागे विलसन्तः शोभमानाः कृष्णशारप्रभाः कृष्णाश्च शाराश्च कृष्णरक्तश्वेतमिश्रिताः प्रभाः सौन्दर्याणि येषां तेषां । कुन्दाः डोलराः मुद्गराः-मोगराः वा तेषां पुष्पाणि तेषां क्षेपः वातेन इतस्ततः अवधूननं तस्य अनुगाः अनुसारिणो ये मधुकराः भ्रमराः तेषां श्रियं शोभां मुष्णन्तीति तेषां, कुन्दपुष्पावधूननानुसारिभ्रमरोपमानां एतादृशानां दशपुरवधूनेत्रकौतूहलानां दशपुरं रन्तिदेवनृपस्य नगरं तस्य वध्वः युवतयः तासां नेत्राणां कौतूहलानि विलासाः तेषां, आत्मबिम्बं स्वस्वरूपं पात्रीकुर्वन् तासां दृष्टिपथं गच्छन् आत्मानं स्वस्वरूपं प्रत्यक्षीकुर्वन् व्रज अग्रतो गच्छ यायाः ॥५१॥

---

તે ઉલ્લંઘી ભ્રુકુટિ નખરાં યુક્ત ને પાપણુંને
ઊંચાડ્યાથી ઉપર વિલસે શ્યામ લાલ પ્રભાળાં ॥
કુંદો પાંસે ભ્રમણ કરતા ભૃંગ સૌંદર્યવાળાં
સ્રીનેત્રોને નયન મધુરૂં રૂપ દેખાડતો જા ॥૫૧॥

હે મેઘ, એ ચર્મણ્વતી નદીને ઓળંગીને આગળ ચાલીશ એટલે, પરિચયવાળી ભ્રુકુટીની લહેરવાળાં, આંખ્યુંનાં પોપચાં પટપટાવવાથી પાંપણું ઉંચી થાતાં કાળી ધોળી કાંતિ શોભા જોવા લાયક બને છે જેની એવાં, પવનથી ડોલતાં ડોલરની પાછળ પાછળ ભમતા ભમરાની શોભાને ચોરનારાં, રંતિદેવ રાજાના દશપુર નગરની યુવતીઓનાં કાળાં ભમર જેવાં નયનોના વિલાસને પોતાનું સ્વરૂપ દેખાડતો અને એ યુવતીનાં નેત્રોની મોજ લેતો આગળ જાજે ॥૫૧॥

ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः ॥
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन् मुखानि ॥५२॥

इदानीं पुण्योपार्जननिमित्तं कुरुक्षेत्रे गमनं प्रति मेघं प्रवर्तयन्नाह । ब्रह्मेति । हे मेघ, अथानन्तरं ब्रह्मावर्तं नाम जनपदं देशं छायया स्वकीयच्छायया गाहमानः प्रविशन् क्षत्रप्रधनपिशुनं क्षत्राणां क्षत्रियाणां प्रधनं भयंकरं युद्धं तस्य पिशुनं स्मारकं सूचकं तत् कौरवं क्षेत्रं कुरूणां इदं क्षेत्रं-कुरुक्षेत्रं भजेथाः व्रज । यत्र कुरुक्षेत्रे महाभारतयुद्धे गांडीवधन्वा गांडीवं धनुः यस्य सः अर्जुनः शितशरशतैः शितैः तीव्रैः तीक्ष्णैः शराणां शतैः असंख्यातशतैः सहस्रैः शरैः राजन्यानां नृपाणां मुखानि अभ्यवर्षत् अभितः सर्वतः सर्वदिक्षु अवर्षत् अपूरयत् चिच्छेद । यथा त्वं धारापातैः वर्षायाः धाराणां प्रपातैः पतनैः कमलानि पूरयसि इव तद्वत् ॥५२॥

• सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ॥
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥१॥

---

છાયારૂપે જનપદ કુરૂક્ષેત્રમાં તૂં પ્રવેશી
સંહાર જ્યાં નૃપતિ ગણનો સ્થાન છે સેવજે એ ॥
રાજાઓનાં મુખ બહુ શરેં અર્જુને ત્યાં જ કાપ્યાં
વર્ષા ધારેં કમળવનને જેમ વર્ષાવતો તૂં ॥૫૨॥

હે મેઘ, દશપુર નગર છોડ્યા પછી બ્રહ્માવર્ત પ્રદેશમાં છાયાથી પ્રવેશ કરતો તું ક્ષત્રિયોના ભયંકર મહાભારતના યુદ્ધને સ્મરણ કરાવતા એવા કુરૂક્ષેત્રમાં જાજે. જે કુરૂક્ષેત્રમાં ગાંડીવ ધનુષ્યધારી અર્જુને તીક્ષ્ણ ધારવાળાં હજારો બાણ રાજાઓનાં મસ્તકો ઉપર ફેંક્યાં અને છેદી નાખ્યાં હતાં. જેરી રીતે તું વરસાદની હજારો ધારાઓથી કમળો ઉપર વરસી તેને અસ્ત વસ્ત કરી નાખે છે. ॥૫૨॥

हित्वा हालामभिमतरसां रेवतीलोचनांकां
बन्धुप्रीत्या समरविमुखो लांगली याः सिषेवे ॥
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥५३॥

इदानीं कुरुक्षेत्रमाहात्म्यमाह हित्वेति ।

हे सौम्य, तदा महाभारतयुद्धसमये बन्धुप्रीत्या पाण्डवकौरवस्नेहेन पाण्डवेषु कौरवेषु स्नेहिषु सम्बन्धिषु सुहृत्सु विद्यमानेषु सत्सु लांगली लांगलं हलं यस्यास्तीति बलभद्रः श्रीकृष्णस्य अग्रजो भ्राता समरविमुखः कुरुक्षेत्रयुद्धपराङ्मुखः भूत्वा अभिमतरसां अभिमतः अभीष्टः रसः स्वादः यस्याः सा तां, रेवतीलोचनांकां रेवत्याः स्वपत्न्याः लोचनवत् चिन्हां यथा रेवतीलोचने मदावेशं कुरुतस्तत्स्वरूपां तद्गुणां स्त्रीनेत्रवत् मोहयन्तीं हालां मदिरां हित्वा त्यक्त्वा याः सरस्वत्याः अपः सिषेवे आस्वादयामास । हे सौम्य त्वमपि तासां सारस्वतीनां सरस्वतीनदीस्थानां अपां जलानां अभिगमं पानं कृत्वा अन्तःशुद्धः अंतरात्मनि श्वेतः अभ्यन्तरनिर्मलः निष्पापः भविता भविष्यसि कृष्णः श्यामस्तु केवलं वर्णमात्रेण बाह्यवर्णेनैव अभ्रेण मेघेन एव भविष्यसि ॥५३॥

---

છોડી સ્વાદિષ્ટ રસિલિ સુરા રેવતી નેત્ર ઘેરી
બંધુ પ્રીતેં તજી હળધરેં યુદ્ધને, એ જ સેવ્યું ॥
સેવા સારસ્વત જલ તણી સૌમ્ય તુંયે કરીને
થાશે અંતર્વિમળ જ પછી રંગ માત્રેં જ કાળો ॥૫૩॥

હે સૌમ્ય સુખદાયક મેઘ, એ કુરૂક્ષેત્રના મહાભારતના યુદ્ધ વખતે કૌરવ અને પાંડવ બધા સાથે સગાંસંબંધીના સગપણને તથા સ્નેહને લઇ યુદ્ધથી અલગ રહેલા શ્રીકૃષ્ણના મોટા ભાઇ બળભદ્રેં પોતાની સ્ત્રી રેવતીનાં નેત્રોની પેઠે મોહ પમાડતી, પોતાને પ્રિય એવી સ્વાદિષ્ટ મદિરાને છોડીને કુરૂક્ષેત્રમાં આવેલી નદીનાં જળનું સેવન કર્યું હતું હે મિત્ર, તું પણ એ સરસ્વતીનાં જળ પીવાથી શુદ્ધ પવિત્ર ધોળાં અંતઃકરણવાળો બનીશ બહારથી જ તું વાદળાંને લઇ માત્ર કાળો દેખાઈશ પણ અંદરથી શુદ્ધ ધોળો પવિત્ર બનીશ. ॥૫૩॥

